# अथ
# विष्णुसहस्र-
# नामावलिः
# प्रारभ्यते ।

मूल्य ८ आणका..

॥ श्रीः ॥

श्रीगणेशाय नमः ॥ अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमंत्रस्य ॥ भगवान् वेदव्यास ऋषिः ॥ श्रीकृष्णः परमात्मा देवता ॥ अनुष्टुप् छंदः ॥ अमृतांशूद्भवो भानुरिति बीजम् ॥ देवकीनंदनः स्रष्टेति शक्तिः॥त्रिसामासामगः सामेति हृदयम् ॥ शंखभृन्नंदकी चक्रीति कीलकम् ॥ शार्ङ्गधन्वा गदाधर इत्यस्त्रम् ॥ रथाङ्गपाणिरक्षोभ्य इति कवचम् ॥ उद्भ-

वः क्षोभणो देव इति पर-
मो मंत्रः ॥ श्रीमहाविष्णु-
प्रीत्यर्थे जपे विनियोगः ॥

अथ ध्यानम् ॥ ॥ शां-
ताकारं भुजगशयनं पद्म-
नाभं सुरेशं विश्वाधारं ग-
गनसदृशं मेघवर्णं शुभां-
गम् ॥ लक्ष्मीकांतं कमल-
नयनं योगिभिर्ध्यानग-
म्यं वंदे विष्णुं भवभयहरं
सर्वलोकैकनाथम् ॥ ॥

॥ इति ध्यानम् ॥

१ विश्वस्मै नमः
२ विष्णवे नमः
३ वषट्काराय नमः
४ भूतभव्यभवत्प्रभ-
वे नमः
५ भूतकृते नमः
६ भूतभृते नमः
७ भावाय नमः
८ भूतात्मने नमः
९ भूतभावनाय नमः
१० पूतात्मने नमः
११ परमात्मने नमः
१२ मुक्तानां परमायै ग-
तये नमः
१३ अव्ययाय नमः

१४ पुरुषाय नमः
१५ साक्षिणे नमः
१६ क्षेत्रज्ञाय नमः
१७ अक्षराय नमः
१८ योगाय नमः
१९ योगविदां नेत्रे नमः
२० प्रधानपुरुषेश्वराय०
२१ नारसिंहवपुषे नमः
२२ श्रीमते नमः
२३ केशवाय नमः
२४ पुरुषोत्तमाय नमः
२५ सर्वाय नमः
२६ शर्वाय नमः
२७ शिवाय नमः
२८ स्थाणवे नमः

२९ भूतादये नमः
३० निधये अव्ययाय०
३१ संभवाय नमः
३२ भावनाय नमः
३३ भर्त्रे नमः
३४ प्रभवाय नमः
३५ प्रभवे नमः
३६ ईश्वराय नमः
३७ स्वयंभुवे नमः
३८ शंभवे नमः
३९ आदित्याय नमः
४० पुष्कराक्षाय नमः
४१ महास्वनाय नमः
४२ अनादिनिधनाय न०
४३ धात्रे नमः

४४ विधात्रे नमः
४५ धातुरुत्तमाय नमः
४६ अप्रमेयाय नमः
४७ हृषीकेशाय नमः
४८ पद्मनाभाय नमः
४९ अमरप्रभवे नमः
५० विश्वकर्मणे नमः
५१ मनवे नमः
५२ त्वष्ट्रे नमः
५३ स्थविष्ठाय नमः
५४ स्थविराय ध्रुवाय न०
५५ अग्राह्याय नमः
५६ शाश्वताय नमः
५७ कृष्णाय नमः
५८ लोहिताक्षाय नमः

५९ प्रतर्दनाय नमः
६० प्रभूताय नमः
६१ त्रिककुब्धाम्ने नमः
६२ पवित्राय नमः
६३ मंगलाय परस्मै नमः
६४ ईशानाय नमः
६५ प्राणदाय नमः
६६ प्राणाय नमः
६७ ज्येष्ठाय नमः
६८ श्रेष्ठाय नमः
६९ प्रजापतये नमः
७० हिरण्यगर्भाय नमः
७१ भूगर्भाय नमः
७२ माधवाय नमः
७३ मधुसूदनाय नमः

७४ ईश्वराय नमः
७५ विक्रमिणे नमः
७६ धन्विने नमः
७७ मेधाविने नमः
७८ विक्रमाय नमः
७९ क्रमाय नमः
८० अनुत्तमाय नमः
८१ दुराधर्षाय नमः
८२ कृतज्ञाय नमः
८३ कृतये नमः
८४ आत्मवते नमः
८५ सुरेशाय नमः
८६ शरणाय नमः
८७ शर्मणे नमः
८८ विश्वरेतसे नमः

८९ प्रजाभवाय नमः
९० अह्ने नमः
९१ संवत्सराय नमः
९२ व्यालाय नमः
९३ प्रत्ययाय नमः
९४ सर्वदर्शनाय नमः
९५ अजाय नमः
९६ सर्वेश्वराय नमः
९७ सिद्धाय नमः
९८ सिद्धये नमः
९९ सर्वादये नमः
१०० अच्युताय नमः
१०१ वृषाकपये नमः
१०२ अमेयात्मने नमः

१०३ सर्वयोगविनिःसृ-
ताय नमः
१०४ वसवे नमः
१०५ वसुमनसे नमः
१०६ सत्याय नमः
१०७ समात्मने नमः
१०८ संमिताय नमः
१०९ समाय नमः
११० अमोघाय नमः
१११ पुंडरीकाक्षाय नमः
११२ वृपकर्मणे नमः
११३ वृपाकृतये नमः
११४ रुद्राय नमः
११५ वहुशिरसे नमः
११६ वभ्रवे नमः

११७ विश्वयोनये नमः
११८ शुचिश्रवसे नमः
११९ अमृताय नमः
१२० शाश्वतस्थाणवे०
१२१ वरारोहाय नमः
१२२ महातपसे नमः
१२३ सर्वगाय नमः
१२४ सर्वविद्धानवे नमः
१२५ विष्वक्सेनाय नमः
१२६ जनार्दनाय नमः
१२७ वेदाय नमः
१२८ वेदविदे नमः
१२९ अव्यंगाय नमः
१३० वेदांगाय नमः
१३१ वेदविदे नमः

१३२ कवये नमः
१३३ लोकाध्यक्षाय नमः
१३४ सुराध्यक्षाय नमः
१३५ धर्माध्यक्षाय नमः
१३६ कृताकृताय नमः
१३७ चतुरात्मने नमः
१३८ चतुर्व्यूहाय नमः
१३९ चतुर्दंष्ट्राय नमः
१४० चतुर्भुजाय नमः
१४१ भ्राजिष्णवे नमः
१४२ भोजनाय नमः
१४३ भोक्त्रे नमः
१४४ सहिष्णवे नमः
१४५ जगदादिजाय नमः
१४६ अनघाय नमः

१४७ विजयाय नमः
१४८ जेत्रे नमः
१४९ विश्वयोनये नमः
१५० पुनर्वसवे नमः
१५१ उपेंद्राय नमः
१५२ वामनाय नमः
१५३ प्रांशवे नमः
१५४ अमोघाय मनः
१५५ शुचये नमः
१५६ ऊर्जिताय नमः
१५७ अतींद्राय नमः
१५८ संग्रहाय नमः
१५९ सर्गाय नमः
१६० धृतात्मने नमः
१६१ नियमाय नमः

१६२ यमाय नमः
१६३ वेद्याय नमः
१६४ वैद्याय नमः
१६५ सदायोगिने नमः
१६६ वीरघ्ने नमः
१६७ माधवाय नमः
१६८ मधवे नमः
१६९ अतींद्रियाय नमः
१७० महामायाय नमः
१७१ महोत्साहाय नमः
१७२ महावलाय नमः
१७३ महाबुद्धये नमः
१७४ महावीर्याय नमः
१७५ महाशक्तये नमः
१७६ महाद्युतये नमः

१७७ अनिर्देश्यवपुषे न०
१७८ श्रीमते नमः
१७९ अमेयात्मने नमः
१८० महाद्रिधृषे नमः
१८१ महेष्वासाय नमः
१८२ महीभर्त्रे नमः
१८३ श्रीनिवासाय नमः
१८४ सतां गतये नमः
१८५ अनिरुद्धाय मनः
१८६ सुरानंदाय नमः
१८७ गोविंदाय नमः
१८८ गोविदांपतये नमः
१८९ मरीचये नमः
१९० दमनाय नमः
१९१ हंसाय नमः

१९२ सुपर्णाय नमः
१९३ भुजगोत्तमाय नमः
१९४ हिरण्यनाभाय न०
१९५ सुतपसे नमः
१९६ पद्मनाभाय नमः
१९७ प्रजापतये नमः
१९८ अमृत्यवे नमः
१९९ सर्वदृशे नमः
२०० सिंहाय नमः
२०१ संधात्रे नमः
२०२ संधिमते नमः
२०३ स्थिराय नमः
२०४ अजाय नमः
२०५ दुर्मर्षणाय नमः
२०६ शास्त्रे नमः

२०७ विश्रुतात्मने नमः
२०८ सुरारिघ्ने नमः
२०९ गुरवे नमः
२१० गुरुतमाय नमः
२११ धाम्ने नमः
२१२ सत्याय नमः
२१३ सत्यपराक्रमाय०
२१४ निमिषाय नमः
२१५ अनिमिषाय नमः
२१६ स्रग्विणे नमः
२१७ वाचस्पतये उदार-
धिये नमः
२१८ अग्रण्ये नमः
२१९ ग्रामण्ये नमः
२२० श्रीमते नमः

२२१ न्यायाय नमः
२२२ नेत्रे नमः
२२३ समीरणाय नमः
२२४ सहस्रमूर्ध्ने नमः
२२५ विश्वात्मने नमः
२२६ सहस्राक्षाय नमः
२२७ सहस्रपदे नमः
२२८ आवर्तनाय नमः
२२९ निवृत्तात्मने नमः
२३० संवृताय नमः
२३१ संप्रमर्दनाय नमः
२३२ अहःसंवर्तकाय न०
२३३ वह्नये नमः
२३४ अनिलाय नमः
२३५ धरणीधराय नमः

२३६ सुप्रसादाय नमः
२३७ प्रसन्नात्मने नमः
२३८ विश्वधृषे नमः
२३९ विश्वभुजे नमः
२४० विभवे नमः
२४१ सत्कर्त्रे नमः
२४२ सत्कृताय नमः
२४३ साधवे नमः
२४४ जह्नवे नमः
२४५ नारायणाय नमः
२४६ नराय नमः
२४७ असंख्येयाय नमः
२४८ अप्रमेयात्मने नमः
२४९ विशिष्टाय नमः
२५० शिष्टकृते नमः

२५१ शुचये नमः
२५२ सिद्धार्थाय नमः
२५३ सिद्धसंकल्पाय न०
२५४ सिद्धिदाय नमः
२५५ सिद्धिसाधनाय०
२५६ वृषाहिणे नमः
२५७ वृषभाय नमः
२५८ विष्णवे नमः
२५९ वृषपर्वणे नमः
२६० वृषोदराय नमः
२६१ वर्धनाय नमः
२६२ वर्धमानाय नमः
२६३ विविक्ताय नमः
२६४ श्रुतिसागराय नमः
२६५ सुभुजाय नमः

२६६ दुर्धराय नमः
२६७ वाग्मिने नमः
२६८ महेंद्राय नमः
२६९ वसुदाय नमः
२७० वसवे नमः
२७१ नैकरूपाय नमः
२७२ बृहद्रूपाय नमः
२७३ शिपिविष्टाय नमः
२७४ प्रकाशनाय नमः
२७५ ओजस्तेजोद्युति-
धराय नमः
२७६ प्रकाशात्मने नमः
२७७ प्रतापनाय नमः
२७८ ऋद्धाय नमः
२७९ स्पष्टाक्षराय नमः

२८० मंत्राय नमः
२८१ चंद्रांशवे नमः
२८२ भास्करद्युतये नमः
२८३ अमृतांशूद्भवाय०
२८४ भानवे नमः
२८५ शशिबिंदवे नमः
२८६ सुरेश्वराय नमः
२८७ औषधाय नमः
२८८ जगतः सेतवे नमः
२८९ सत्यधर्मपराक्रमा०
२९० भूतभव्यभवन्नाथा-
य नमः
२९१ पवनाय नमः
२९२ पावनाय नमः
२९३ अनलाय नमः

२९४ कामघ्ने नमः
२९५ कामकृते नमः
२९६ कांताय नमः
२९७ कामाय नमः
२९८ कामप्रदाय नमः
२९९ प्रभवे नमः
३०० युगादिकृते नमः
३०१ युगावर्ताय नमः
३०२ नैकमायाय नमः
३०३ महाशनाय नमः
३०४ अदृश्याय नमः
३०५ अव्यक्तरूपाय न०
३०६ सहस्रजिते नमः
३०७ अनंतजिते नमः
३०८ इष्टाय नमः

३०९ विशिष्टाय नमः
३१० शिष्टेष्टाय नमः
३११ शिखंडिने नमः
३१२ नहुषाय नमः
३१३ वृषाय नमः
३१४ क्रोधघ्ने नमः
३१५ क्रोधकृत्कर्त्रे नमः
३१६ विश्ववाहवे नमः
१७ महीधराय नमः
१८ अच्युताय नमः
१९ प्रथिताय नमः
२० प्राणाय नमः
२१ प्राणदाय नमः
२२ वासवानुजाय नमः
२३ अपांनिधये नमः

३२४ अधिष्ठानाय नमः
३२५ अप्रमत्ताय नमः
३२६ प्रतिष्ठिताय नमः
३२७ स्कंदाय नमः
३२८ स्कंदधराय नमः
३२९ धुर्याय नमः
३३० वरदाय नमः
३३१ वायुवाहनाय नमः
३३२ वासुदेवाय नमः
३३३ बृहद्भानवे नमः
३३४ आदिदेवाय नमः
३३५ पुरंदराय नमः
३३६ अशोकाय नमः
३३७ तारणाय नमः
३३८ ताराय नमः

३३९ शूराय नमः
३४० शौरये नमः
३४१ जनेश्वराय नमः
३४२ अनुकूलाय नमः
३४३ शतावर्ताय नमः
३४४ पद्मिने नमः
३४५ पद्मनिभेक्षणाय न०
३४६ पद्मनाभाय नमः
३४७ अरविंदाक्षाय नमः
३४८ पद्मगर्भाय नमः
३४९ शरीरभृते नमः
३५० महर्द्धये नमः
३५१ ऋद्धाय नमः
३५२ वृद्धात्मने नमः
३५३ महाक्षाय नमः

३५४ गरुडध्वजाय नमः
३५५ अतुलाय नमः
३५६ शरभाय नमः
३५७ भीमाय नमः
३५८ समयज्ञाय नमः
३५९ हविर्हरये नमः
३६० सर्वलक्षणलक्षण्या०
३६१ लक्ष्मीवते नमः
३६२ समितिंजयाय नमः
३६३ विक्षराय नमः
३६४ रोहिताय नमः
३६५ मार्गहेतवे नमः
३६६ दामोदराय नमः
३६७ सहाय नमः
३६८ महीधराय नमः

३६९ महाभागाय नमः
३७० वेगवते नमः
३७१ अमिताशनाय न०
३७२ उद्भवाय नमः
३७३ क्षोभणाय नमः
३७४ देवाय नमः
३७५ श्रीगर्भाय नमः
३७६ परमेश्वराय नमः
३७७ करणाय नमः
३७८ कारणाय नमः
३७९ कर्त्रे नमः
३८० विकर्त्रे नमः
३८१ गहनाय नमः
३८२ गुहाय नमः
३८३ व्यवसायाय नमः

३८४ व्यवस्थानाय नमः
३८५ संस्थानाय नमः
३८६ स्थानदाय नमः
३८७ ध्रुवाय नमः
३८८ परर्द्धये नमः
३८९ परमाय नमः
३९० स्पष्टाय नमः
३९१ तुष्टाय नमः
३९२ पुष्टाय नमः
३९३ शुभेक्षणाय नमः
३९४ रामाय नमः
३९५ विरामाय नमः
३९६ विरजाय नमः
३९७ मार्गाय नमः
३९८ नेयाय नमः

३९९ नयाय नमः
४०० अनयाय नमः
४०१ वीराय नमः
४०२ शक्तिमतांश्रेष्ठाय०
४०३ धर्माय नमः
४०४ धर्मविदुत्तमाय न०
४०५ वैकुंठाय नमः
४०६ पुरुषाय नमः
४०७ प्राणाय नमः
४०८ प्राणदाय नमः
४०९ प्रणवाय नमः
४१० पृथवे नमः
४११ हिरण्यगर्भाय नमः
४१२ शत्रुघ्नाय नमः
४१३ व्याप्ताय नमः

४१४ वायवे नमः
४१५ अधोक्षजाय नमः
४१६ ऋतवे नमः
४१७ सुदर्शनाय नमः
४१८ कालाय नमः
४१९ परमेष्ठिने नमः
४२० परिग्रहाय नमः
४२१ उग्राय नमः
४२२ संवत्सराय नमः
४२३ दक्षाय नमः
४२४ विश्रामाय नमः
४२५ विश्वदक्षिणाय नमः
४२६ विस्ताराय नमः
४२७ स्थावरस्थाणवे०
४२८ प्रमाणाय नमः

४२९ बीजायाऽव्ययायन०
४३० अर्थाय नमः
४३१ अनर्थाय नमः
४३२ महाकोशाय नमः
४३३ महाभोगाय नमः
४३४ महाधनाय नमः
४३५ अनिर्विण्णाय नमः
४३६ स्थविष्ठाय नमः
४३७ अभुवे नमः
४३८ धर्मयूपाय नमः
४३९ महामखाय नमः
४४० नक्षत्रनेमये नमः
४४१ नक्षत्रिणे नमः
४४२ क्षमाय नमः
४४३ क्षामाय नमः

४४४ समीहनाय नमः
४४५ यज्ञाय नमः
४४६ इज्याय नमः
४४७ महेज्याय नमः
४४८ क्रतवे नमः
४४९ सत्राय नमः
४५० सतांगतये नमः
४५१ सर्वदर्शिने नमः
४५२ विमुक्तात्मने नमः
४५३ सर्वज्ञाय नमः
४५४ ज्ञानमुत्तमाय नमः
४५५ सुव्रताय नमः
४५६ सुमुखाय नमः
४५७ सूक्ष्माय नमः
४५८ सुघोपाय नमः

४५९ सुखदाय नमः
४६० सुहृदे नमः
४६१ मनोहराय नमः
४६२ जितक्रोधाय नमः
४६३ वीरबाहवे नमः
४६४ विदारणाय नमः
४६५ स्वापनाय नमः
४६६ स्ववशाय नमः
४६७ व्यापिने नमः
४६८ नैकात्मने नमः
४६९ नैककर्मकृते नमः
४७० वत्सराय नमः
४७१ वत्सलाय नमः
४७२ वत्सिने नमः
४७३ रत्नगर्भाय नमः

४७४ धनेश्वराय नमः
४७५ धर्मगुपे नमः
४७६ धर्मकृते नमः
४७७ धर्मिणे नमः
४७८ सते नमः
४७९ असते नमः
४८० क्षराय नमः
४८१ अक्षराय नमः
४८२ अविज्ञात्रे नमः
४८३ सहस्रांशवे नमः
४८४ विधात्रे नमः
४८५ कृतलक्षणाय नमः
४८६ गभस्तिनेमये नमः
४८७ सत्वस्थाय नमः
४८८ सिंहाय नमः

४८९ भूतमहेश्वराय नमः
४९० आदिदेवाय नमः
४९१ महादेवाय नमः
४९२ देवेशाय नमः
४९३ देवभृद्गुरवे नमः
४९४ उत्तराय नमः
४९५ गोपतये नमः
४९६ गोप्त्रे नमः
४९७ ज्ञानगम्याय नमः
४९८ पुरातनाय नमः
४९९ शरीरभूतभृते नमः
५०० भोक्त्रे नमः
५०१ कपींद्राय नमः
५०२ भूरिदक्षिणाय नमः
५०३ सोमपाय नमः

५०४ अमृतपाय नमः

५०५ सोमाय नमः

५०६ पुरुजिते नमः

५०७ पुरुसत्तमाय नमः

५०८ विनयाय नमः

५०९ जयाय नमः

५१० सत्यसंधाय नमः

५११ दाशार्हाय नमः

५१२ सात्वतांपतये नमः

५१३ जीवाय नमः

५१४ विनयितासाक्षिणे०

५१५ मुकुंदाय नमः

५१६ अमितविक्रमाय०

५१७ अंभोनिधये नमः

५१८ अनंतात्मने नमः

५१९ महोदधिशयायन०
५२० अंतकाय नमः
५२१ अजाय नमः
५२२ महार्हाय नमः
५२३ स्वाभाव्याय नमः
५२४ जितामित्राय नमः
५२५ प्रमोदनाय नमः
५२६ आनंदाय नमः
५२७ नंदनाय नमः
५२८ नंदाय नमः
५२९ सत्यधर्मणे नमः
५३० त्रिविक्रमाय नमः
५३१ महर्षिः कपिला-
चार्याय नमः
५३२ कृतज्ञाय नमः

५३३ मेदिनीपतये नमः
५३४ त्रिपदाय नमः
५३५ त्रिदशाध्यक्षाय न०
५३६ महाशृंगाय नमः
५३७ कृतांतकृते नमः
५३८ महावराहाय नमः
५३९ गोविंदाय नमः
५४० सुषेणाय नमः
५४१ कनकांगदिने नमः
५४२ गुह्याय नमः
५४३ गभीराय नमः
५४४ गहनाय नमः
५४५ गुप्ताय नमः
५४६ चक्रगदाधराय न०
५४७ वेधसे नमः

५४८ स्वांगाय नमः
५४९ अजिताय नमः
५५० कृष्णाय नमः
५५१ दृढाय नमः
५५२ संकर्षणाय नमः
५५३ अच्युताय नमः
५५४ वरुणाय नमः
५५५ वारुणाय नमः
५५६ वृक्षाय नमः
५५७ पुष्कराक्षाय नमः
५५८ महामनसे नमः
५५९ भगवते नमः
५६० भगघ्ने नमः
५६१ आनंदिने नमः
५६२ वनमालिने नमः

५६३ हलायुधाय नमः
५६४ आदित्याय नमः
५६५ ज्योतिरादित्याय०
५६६ सहिष्णवे नमः
५६७ गतिसत्तमाय नमः
५६८ सुधन्वने नमः
५६९ खंडपरशवे नमः
५७० दारुणाय नमः
५७१ द्रविणप्रदाय नमः
५७२ दिवस्पृशे नमः
५७३ सर्वदृग्व्यासाय०
५७४ वाचस्पतये नमः
५७५ अयोनिजाय नमः
५७६ त्रिसाम्ने नमः
५७७ सामगाय नमः

५७८ सामाय नमः
५७९ निर्वाणाय नमः
५८० भेषजाय नमः
५८१ भिषजे नमः
५८२ संन्यासकृते नमः
५८३ शमाय नमः
५८४ शांताय नमः
५८५ निष्ठाशांतिःपराय-
णाय नमः
५८६ शुभांगाय नमः
५८७ शांतिदाय नमः
५८८ स्रष्ट्रे नमः
५८९ कुमुदाय नमः
५९० कुवलेशयाय नमः
५९१ गोहिताय नमः

५९२ गोपतये नमः
५९३ गोप्त्रे नमः
५९४ वृषभाक्षाय नमः
५९५ वृषप्रियाय नमः
५९६ अनिवर्तिने नमः
५९७ निवृत्तात्मने नमः
५९८ संक्षेप्त्रे नमः
५९९ क्षेमकृते नमः
६०० शिवाय नमः
६०१ श्रीवत्सवक्षसे नमः
६०२ श्रीवासाय नमः
६०३ श्रीपतये नमः
६०४ श्रीमतांवराय नमः
६०५ श्रीदाय नमः
३०६ श्रीशाय नमः

६०७ श्रीनिवासाय नमः
६०८ श्रीनिधये नमः
६०९ श्रीविभावनाय न०
६१० श्रीधराय नमः
६११ श्रीकराय नमः
६१२ श्रेयसे नमः
६१३ श्रीमते नमः
६१४ लोकत्रयाश्रयाय०
६१५ स्वक्षाय नमः
६१६ स्वंगाय नमः
६१७ शतानंदाय नमः
६१८ नंदिने नमः
६१९ ज्योतिर्गणेश्वराय०
६२० विजितात्मने नमः
६२१ विधेयात्मने नमः

६२२ सत्कीर्तये नमः
६२३ छिन्नसंशयाय नमः
६२४ उदीर्णाय नमः
६२५ सर्वतश्चक्षुषे नमः
६२६ अनीशाय नमः
६२७ शाश्वतस्थिराय०
६२८ भूशयाय नमः
६२९ भूषणाय नमः
६३० भूतये नमः
६३१ विशोकाय नमः
६३२ शोकनाशनाय न०
६३३ अर्चिष्मते नमः
६३४ अर्चिताय नमः
६३५ कुंभाय नमः
६३६ विशुद्धात्मने नमः

६३७ विशोधनाय नमः
६३८ अनिरुद्धाय नमः
६३९ अप्रतिरथाय नमः
६४० प्रद्युम्नाय नमः
६४१ अमितविक्रमाय०
६४२ कालनेमिनिघ्ने नमः
६४३ वीराय नमः
६४४ शौरये नमः
६४५ शूरजनेश्वराय नमः
६४६ त्रिलोकात्मने नमः
६४७ त्रिलोकेशाय नमः
६४८ केशवाय नमः
६४९ केशिघ्ने नमः
६५० हरये नमः
६५१ कामदेवाय नमः

६५२ कामपालाय नमः
६५३ कामिने नमः
६५४ कांताय नमः
६५५ कृतागमाय नमः
६५६ अनिर्देश्यवपुषे०
६५७ विष्णवे नमः
६५८ वीराय नमः
६५९ अनंताय नमः
६६० धनंजयाय नमः
६६१ ब्रह्मण्याय नमः
६६२ ब्रह्मकृते नमः
६६३ ब्राह्मिणे नमः
६६४ ब्रह्मणे नमः
६६५ ब्रह्मविवर्धनाय न०
६६६ ब्रह्मविदे नमः

६६७ ब्राह्मणाय नमः
६६८ ब्रह्मिणे नमः
६६९ ब्रह्मज्ञाय नमः
६७० ब्राह्मणप्रियाय नमः
६७१ महाक्रमाय नमः
६७२ महाकर्मणे नमः
६७३ महातेजसे नमः
६७४ महोरगाय नमः
६७५ महाक्रतवे नमः
६७६ महायज्वने नमः
६७७ महायज्ञाय नमः
६७८ महाहविषे नमः
६७९ स्तव्याय नमः
६८० स्तवप्रियाय नमः
६८१ स्तोत्राय नमः

६८२ स्तुतये नमः
६८३ स्तोत्रे नमः
६८४ रणप्रियाय नमः
६८५ पूर्णाय नमः
६८६ पूरयित्रे नमः
६८७ पुण्याय नमः
६८८ पुण्यकीर्तये नमः
६८९ अनामयाय नमः
६९० मनोजवाय नमः
६९१ तीर्थकराय नमः
६९२ वसुरेतसे नमः
६९३ वसुप्रदाय नमः
६९४ वसुप्रदाय नमः
६९५ वासुदेवाय नमः
६९६ वसवे नमः

६९७ वसुमनसे नमः
६९८ हविषे नमः
६९९ सद्गतये नमः
७०० सत्कृतये नमः
७०१ सत्तायै नमः
७०२ सद्भूतये नमः
७०३ सत्परायणाय नमः
७०४ शूरसेनाय नमः
७०५ यदुश्रेष्ठाय नमः
७०६ सन्निवासाय नमः
७०७ सुयामुनाय नमः
७०८ भूतावासाय नमः
७०९ वासुदेवाय नमः
७१० सर्वासुनिलयाय०
७११ अनलाय नमः

७१२ दर्पघ्ने नमः
७१३ दर्पदाय नमः
७१४ दृप्ताय नमः
७१५ दुर्धराय नमः
७१६ अपराजिताय नमः
७१७ विश्वमूर्तये नमः
७१८ महामूर्तये नमः
७१९ दीप्तमूर्तये नमः
७२० अमूर्तिमते नमः
७२१ अनेकमूर्तये नमः
७२२ अव्यक्ताय नमः
७२३ शतमूर्तये नमः
७२४ शताननाय नमः
७२५ एकाय नमः
७२६ नैकाय नमः

७२७ सवाय नमः
७२८ काय नमः
७२९ कस्मै नमः
७३० यस्मै नमः
७३१ तस्मै नमः
७३२ पदमनुत्तमाय नमः
७३३ लोकबंधवे नमः
७३४ लोकनाथाय नमः
७३५ माधवाय नमः
७३६ भक्तवत्सलाय नमः
७३७ सुवर्णवर्णाय नमः
७३८ हेमांगाय नमः
७३९ वरांगाय नमः
७४० चंदनांगदिने नमः
७४१ वीरघ्ने नमः

७४२ विषमाय नमः
७४३ शून्याय नमः
७४४ घृताशिषे नमः
७४५ अचलाय नमः
७४६ चलाय नमः
७४७ अमानिने नमः
७४८ मानदाय नमः
७४९ मान्याय नमः
७५० लोकस्वामिने नमः
७५१ त्रिलोकधृषे नमः
७५२ सुमेधसे नमः
७५३ मेधजाय नमः
७५४ धन्याय नमः
७५५ सत्यमेधसे नमः
७५६ धराधराय नमः

७५७ तेजोवृषाय नमः
७५८ द्युतिधराय नमः
७५९ सर्वशस्त्रभृतांवरा-
य नमः
७६० प्रग्रहाय नमः
७६१ निग्रहाय नमः
७६२ व्यग्राय नमः
७६३ नैकशृंगाय नमः
७६४ गदाग्रजाय नमः
७६५ चतुर्मूर्तये नमः
७६६ चतुर्बाहवे नमः
७६७ चतुर्व्यूहाय नमः
७६८ चतुर्गतये नमः
७६९ चतुरात्मने नमः
७७० चतुर्भावाय नमः

७७१ चतुर्वेदविदे नमः
७७२ एकपदे नमः
७७३ समावर्ताय नमः
७७४ निवृत्तात्मने नमः
७७५ दुर्जयाय नमः
७७६ दुरतिक्रमाय नमः
७७७ दुर्लभाय नमः
७७८ दुर्गमाय नमः
७७९ दुर्गाय नमः
७८० दुरावासाय नमः
७८१ दुरारिघ्ने नमः
७८२ शुभांगाय नमः
७८३ लोकसारंगाय नमः
७८४ सुतंतवे नमः
७८५ तंतुवर्धनाय नमः

७८६ इंद्रकर्मणे नमः
७८७ महाकर्मणे नमः
७८८ कृतकर्मणे नमः
७८९ कृतागमाय नमः
७९० उद्भवाय नमः
७९१ सुंदराय नमः
७९२ सुंदाय नमः
७९३ रत्ननाभाय नमः
७९४ सुलोचनाय नमः
७९५ अर्काय नमः
७९६ वाजसनाय नमः
७९७ श्रृंगिणे नमः
७९८ जयंताय नमः
७९९ सर्वविज्जयिने नमः
८०० सुवर्णबिंदवे नमः

८०१ अक्षोभ्याय नमः
८०२ सर्ववागीश्वरेश्वराय नमः
८०३ महाह्रदाय नमः
८०४ महागर्ताय नमः
८०५ महाभूताय नमः
८०६ महानिधये नमः
८०७ कुमुदाय नमः
८०८ कुंदराय नमः
८०९ कुंदाय नमः
८१० पर्जन्याय नमः
८११ पावनाय नमः
८१२ अनिलाय नमः
८१३ अमृतांशाय नमः
८१४ अमृतवपुषे नमः

८१५ सर्वज्ञाय नमः
८१६ सर्वतोमुखाय नमः
८१७ सुलभाय नमः
८१८ सुव्रताय नमः
८१९ सिद्धाय नमः
८२० शत्रुजिते नमः
८२१ शत्रुतापनाय नमः
८२२ न्यग्रोधाय नमः
८२३ उदुंबराय नमः
८२४ अश्वत्थाय नमः
८२५ चाणूरांध्रनिषूदना-
य नमः
८२६ सहस्रार्चिषे नमः
८२७ सप्तजिह्वाय नमः
८२८ सप्तैधसे नमः

८२९ सप्तवाहनाय नमः
८३० अमूर्तये नमः
८३१ अनघाय नमः
८३२ अचिंत्याय नमः
८३३ भयकृते नमः
८३४ भयनाशनाय नमः
८३५ अणवे नमः
८३६ बृहते नमः
८३७ कृशाय नमः
८३८ स्थूलाय नमः
८३९ गुणभृते नमः
८४० निर्गुणाय नमः
८४१ महते नमः
८४२ अधृताय नमः
८४३ स्वधृताय नमः

८४४ स्वास्याय नमः
८४५ प्राग्वंशाय नमः
८४६ वंशवर्धनाय नमः
८४७ भारभृते नमः
८४८ कथिताय नमः
८४९ योगिने नमः
८५० योगीशाय नमः
८५१ सर्वकामदाय नमः
८५२ आश्रमाय नमः
८५३ श्रमणाय नमः
८५४ क्षामाय नमः
८५५ सुपर्णाय नमः
८५६ वायुवाहनाय नमः
८५७ धनुर्धराय नमः
८५८ धनुर्वेदाय नमः

८५९ दंडाय नमः
८६० दमयित्रे नमः
८६१ दमाय नमः
८६२ अपराजिताय नमः
८६३ सर्वसहाय नमः
८६४ नियंत्रे नमः
८६५ नियमाय नमः
८६६ यमाय नमः
८६७ सत्ववते नमः
८६८ सात्त्विकाय नमः
८६९ सत्याय नमः
८७० सत्यधर्मपरायणा-
य नमः
८७१ अभिप्रायाय नमः
८७२ प्रियार्हाय नमः

८७३ अर्हाय नमः
८७४ प्रियकृते नमः
८७५ प्रीतिवर्धनाय नमः
८७६ विहायसगतये न०
८७७ ज्योतिषे नमः
८७८ सुरुचये नमः
८७९ हुतभुजे नमः
८८० विभवे नमः
८८१ रवये नमः
८८२ विरोचनाय नमः
८८३ सूर्याय नमः
८८४ सवित्रे नमः
८८५ रविलोचनाय नमः
८८६ अनंताय नमः
८८७ हुतभुजे नमः

८८८ भोक्त्रे नमः
८८९ सुखदाय नमः
८९० नैकजाय नमः
८९१ अग्रजाय नमः
८९२ अनिर्विण्णाय नमः
८९३ सदामर्षिणे नमः
८९४ लोकाधिष्ठानाय०
८९५ अद्भुताय नमः
८९६ सनात्नमः
८९७ सनातनतमाय न०
८९८ कपिलाय नमः
८९९ कपये नमः
९०० अव्ययाय नमः
९०१ स्वस्तिदाय नमः
९०२ स्वस्तिकृते नमः

९०३ स्वस्तिने नमः
९०४ स्वस्तिभुजे नमः
९०५ स्वस्तिदक्षिणाय०
९०६ अरौद्राय नमः
९०७ कुंडलिने नमः
९०८ चक्रिणे नमः
९०९ विक्रमिणे नमः
९१० ऊर्जितशासनाय०
९११ शब्दातिगाय नमः
९१२ शब्दसहाय नमः
९१३ शिशिराय नमः
९१४ शर्वरीकराय नमः
९१५ अक्रूराय नमः
९१६ पेशलाय नमः
९१७ दक्षाय नमः

९१८ दक्षिणाय नमः
९१९ क्षमिणांवराय नमः
९२० विद्वत्तमाय नमः
९२१ वीतभयाय नमः
९२२ पुण्यश्रवणकीर्तना-
य नमः
९२३ उत्तारणाय नमः
९२४ दुष्कृतिघ्ने नमः
९२५ पुण्याय नमः
९२६ दुःस्वप्ननाशनाय०
९२७ वीरघ्ने नमः
९२८ रक्षणाय नमः
९२९ संताय नमः
९३० जीवनाय नमः
९३१ पर्यवस्थिताय नमः

९३२ अनंतरूपाय नमः
९३३ अनंतश्रिये नमः
९३४ जितमन्यवे नमः
९३५ भयापहाय नमः
९३६ चतुरस्राय नमः
९३७ गभीरात्मने नमः
९३८ विदिशाय नमः
९३९ व्यादिशाय नमः
९४० दिशाय नमः
९४१ अनादये नमः
९४२ भुवे नमः
९४३ भुवोलक्ष्म्यै नमः
९४४ सुवीराय नमः
९४५ रुचिरांगदाय नमः
९४६ जननाय नमः

१४७ जनजन्मादये नमः
१४८ भीमाय नमः
१४९ भीमपराक्रमाय न०
१५० आधारनिलयाय०
१५१ धात्रे नमः
१५२ पुष्पहासाय नमः
१५३ प्रजागराय नमः
१५४ ऊर्ध्वगाय नमः
१५५ सत्पथाचाराय न०
१५६ प्राणदाय नमः
१५७ प्रणवाय नमः
१५८ पणाय नमः
१५९ प्रमाणाय नमः
१६० प्राणनिलयाय न०
१६१ प्राणभृते नमः

९६२ प्राणजीवनाय नमः
९६३ तत्त्वाय नमः
९६४ तत्त्वविदे नमः
९६५ एकात्मने नमः
९६६ जन्ममृत्युजरातिगाय नमः
९६७ भूर्भुवःस्वस्तरवे०
९६८ ताराय नमः
९६९ सपित्रे नमः
९७० प्रपितामहाय नमः
९७१ यज्ञाय नमः
९७२ यज्ञपतये नमः
९७३ यज्वने नमः
९७४ यज्ञांगाय नमः
९७५ यज्ञवाहनाय नमः

१७६ यज्ञभृते नमः
१७७ यज्ञकृते नमः
१७८ यज्ञिने नमः
१७९ यज्ञभुजे नमः
१८० यज्ञसाधनाय नमः
१८१ यज्ञांतकृते नमः
१८२ यज्ञगुह्याय नमः
१८३ अन्नाय नमः
१८४ अन्नादाय नमः
१८५ आत्मयोनये नमः
१८६ स्वयंजाताय नमः
१८७ वैखानाय नमः
१८८ सामगायनाय नमः
१८९ देवकीनंदनाय न०
१९० स्रष्ट्रे नमः

९९१ क्षितीशाय नमः
९९२ पापनाशनाय नमः
९९३ शंखभृते नमः
९९४ नंदकिने नमः
९९५ चक्रिणे नमः
९९६ शार्ङ्गधन्वने नमः
९९७ गदाधराय नमः
९९८ रथांगपाणये नमः
९९९ अक्षोभ्याय नमः
१००० सर्वप्रहरणायुधाय नमः

इति श्रीविष्णोर्दिव्यसहस्रनामावली समाप्ता ॥

इदं पुस्तकं मुम्बापुर्यां स्वीये निर्णयसाग-
राख्यमुद्रणयन्त्रालये तदधिपतिना
मुद्रापयित्वा प्रसिद्धिं नीतम्॥

शकाब्दाः १८५४, सनाब्दाः १९३२.

Published by Pandurang Jawaji,
Proprietor, Nirnaya Sagar Press,
26-28, Kolbhat Lane, Bombay.

Printed by Ramchandra Yesu Shedge,
at the Nirnaya Sagar Press,
26-28, Kolbhat Lane, Bombay.

# अथ
# सूर्यसहस्र-
# नामावलिः
# प्रारभ्यते ।

किंमत ४ आणे.

श्रीगणेशाय नमः ॥ अद्ये-
त्यादिपूर्वो० अमुकनाम्नो
मम शरीरे उत्पन्नोत्प-
त्स्यमानानां वातपित्त-
कफसन्निपातज्वराग्निमां-
द्यशिरःशूलक्षीणधात्वा-
दिरोगाणां समूलनिरस-
नद्वारा क्षिप्रारोग्यशरीर-
पुष्टिदीर्घायुष्यैश्वर्यादिवृ-
द्धिशत्रुपराजयादिनिखि-
लकामनासिद्धये श्रीसूर्य-
नारायणप्रीतये च श्री-
सूर्यदिव्यसहस्रनामभिः
सहस्रसंख्याकामुकद्रव्य-

समर्पणं करिष्ये ॥ इति
संकल्प्य ॥ ॥ अस्य श्री-
सूर्यनारायणसहस्रनाम-
स्तोत्रमंत्रस्य ॥ कण्वप्रस्क-
ण्व ऋषिः ॥ अनुष्टुप् छंदः ॥
श्रीसूर्यनारायणो देवता ॥
वेदादिर्बीजम् ॥ मायाश-
क्तिः ॥ संकल्पिताभीष्टसि-
द्ध्यर्थे सहस्रसंख्याकामु-
कद्रव्यसमर्पणे विनियोगः
॥अथ ध्यानम् ॥ ॥ ध्याये-
त्तुंगरथस्थितं युगभुजं स-
च्छंखचक्रान्वितं तेजोरा-
शिवरं किरीटकटकाद्यैर्भू-
षणैरंचितम् ॥ वेदैर्देवगणै-

नुतं मुनिवरैर्वंदारुवृंदा-
र्चितं भक्ताभीष्टकरं रुजां
क्षयकरं श्रीसूर्यनारायण-
म् ॥ १ ॥ इति ध्यानम् ॥

१ विश्वजिते नमः
२ विश्वजित्कर्त्रे नमः
३ विश्वात्मने नमः
४ विश्वतोमुखाय नमः
५ विश्वेश्वराय नमः
६ विश्वयोनये नमः
७ नियतात्मने नमः
८ जितेंद्रियाय नमः
९ कालाश्रयाय नमः
१० कालकर्त्रे नमः
११ कालघ्ने नमः
१२ कालनाशनाय न०
१३ महायोगिने नमः
१४ महाबुद्धये नमः
१५ महात्मने नमः

१६ सुमहाबलाय नमः
१७ प्रभवे नमः
१८ विभवे नमः
१९ भूतनाथाय नमः
२० भूतात्मने नमः
२१ भुवनेश्वराय नमः
२२ भूतभव्याय नमः
२३ भावितात्मने नमः
२४ भूतांतःकरणाय०
२५ शिवाय नमः
२६ शरण्याय नमः
२७ कमलानंदाय नमः
२८ नंदनाय नमः
२९ नंदवर्धनाय नमः
३० वरेण्याय नमः

३१ वरदाय नमः
३२ योगिने नमः
३३ सुसंयुक्ताय नमः
३४ प्रकाशनाय नमः
३५ प्राप्तयानाय नमः
३६ परप्राणाय नमः
३७ प्रीतात्मने नमः
३८ प्रणताय नमः
३९ प्रियाय नमः
४० नयाय नमः
४१ सहस्रपदे नमः
४२ साधवे नमः
४३ दिव्यकुंडलमंडिताय नमः
४४ अव्यंगधारिणे न०

४५ धीरात्मने नमः
४६ प्रचेतसे नमः
४७ वायुवाहनाय नमः
४८ समाहितमतये नमः
४९ धात्रे नमः
५० विधात्रे नमः
५१ कृतमंगलाय नमः
५२ कपर्दिने नमः
५३ कल्पकृते नमः
५४ रुद्राय नमः
५५ सुमनसे नमः
५६ धर्मवत्सलाय नमः
५७ समायुक्ताय नमः
५८ नियुक्तात्मने नमः
५९ शमात्मने नमः

६० कृतिनां वराय नमः
६१ अविचिंत्यवपुषे०
६२ श्रेष्ठाय नमः
६३ महायोगाय नमः
६४ महेश्वराय नमः
६५ कांताय नमः
६६ कामादये नमः
६७ आदित्याय नमः
६८ नियतात्मने नमः
६९ निराकुलाय नमः
७० कामाय नमः
७१ कारुणिकाय नमः
७२ कर्त्रे नमः
७३ कमलाकराय नमः
७४ बोधकाय नमः

७५ सप्तसप्तये नमः
७६ अचिंत्यात्मने न०
७७ महाकारुणिकोत्त-
माय नमः
७८ संजीवनाय नमः
७९ जीवनाथाय नमः
८० जगज्जीवाय नमः
८१ जगत्पतये नमः
८२ अजेयाय नमः
८३ विश्वनिलयाय०
८४ संविभागिने०
८५ वृषध्वजाय नमः
८६ वृषाकपये नमः
८७ कल्पकर्त्रे नमः
८८ कल्पांतकरणाय०

८९ रवये नमः
९० एकचक्ररथाय नमः
९१ मौनिने नमः
९२ सुरथाय नमः
९३ रथिनां वराय नमः
९४ अक्रोधनाय नमः
९५ रश्मिमालिने नमः
९६ तेजोराशये नमः
९७ विभावसवे नमः
९८ दिवाकृते नमः
९९ दिनकृते नमः
१०० देवाय नमः
१०१ देवदेवाय नमः
१०२ दिवस्पतये नमः
१०३ दिननाथाय नमः

१०४ हविर्होत्रे नमः
१०५ दिव्यवाहवे नमः
१०६ दिवाकराय नमः
१०७ यज्ञाय नमः
१०८ यज्ञपतये नमः
१०९ पूष्णे नमः
११० स्वर्णरेतसे नमः
१११ परावराय नमः
११२ परावरज्ञाय नमः
११३ तरणये नमः
११४ अंशुमालिने नमः
११५ मनोहराय नमः
११६ प्राज्ञाय नमः
११७ प्रजापतये नमः
११८ सूर्याय नमः

११९ सवित्रे नमः
१२० विष्णवे नमः
१२१ अंशुमते नमः
१२२ महागतये नमः
१२३ गंधवहाय नमः
१२४ विहिताय नमः
१२५ विधये नमः
१२६ आशुगाय नमः
१२७ पतंगाय नमः
१२८ पतगाय नमः
१२९ स्थाणवे नमः
१३० विहंगाय नमः
१३१ विहगाय नमः
१३२ वराय नमः
१३३ हर्यश्वाय नमः

१३४ हरिताश्वाय नमः
१३५ हरिदश्वाय नमः
१३६ जगत्प्रियाय नमः
१३७ त्र्यंबकाय नमः
१३८ सर्वदमनाय नमः
१३९ भावितात्मने नमः
१४० भिषग्वराय नमः
१४१ आलोककृते नमः
१४२ लोकनाथाय नमः
१४३ लोकालोकनमस्कृ-
ताय नमः
१४४ कालाय नमः
१४५ कल्पांतकाय नमः
१४६ वह्नये नमः
१४७ तपनाय नमः

१४८ विश्वतापनाय नमः
१४९ खड्गिने नमः
१५० प्रतर्दनाय नमः
१५१ धन्याय नमः
१५२ हयगाय नमः
१५३वाग्विशारदाय नमः
१५४ श्रीमते नमः
१५५ शिशिराय नमः
१५६ वाग्मिने नमः
१५७ श्रीपतये नमः
१५८ श्रीनिकेतनाय नमः
१५९ श्रीकंठाय नमः
१६० श्रीधराय नमः
१६१ श्रीशाय नमः
१६२ श्रीनिवासाय नमः

१६३ वसुप्रदाय नमः
१६४ कामचारिणे नमः
१६५ महामायाय नमः
१६६ महेशाय नमः
१६७ विदिताशयाय०
१६८ तीर्थक्रियावते नमः
१६९ सुनयाय नमः
१७० विभवाय नमः
१७१ भक्तवत्सलाय नमः
१७२ कीर्तये नमः
१७३ कीर्तिकराय नमः
१७४ नित्याय नमः
१७५ कुंडलिने नमः
१७६ कवचिने नमः
१७७ रथिने नमः

१७८ हिरण्यरेतसे नमः
१७९ सत्याश्वाय नमः
१८० प्रयतात्मने नमः
१८१ परंतपाय नमः
१८२ बुद्धिमते नमः
१८३ अमरश्रेष्ठाय नमः
१८४ रोचिष्णवे नमः
१८५ पाकशासनाय नमः
१८६ समुद्राय नमः
१८७ धनदाय नमः
१८८ धात्रे नमः
१८९ मांधात्रे नमः
१९० कश्मलापहाय नमः
१९१ तमोघ्ने नमः
१९२ ध्वांतघ्ने नमः

१९३ ज्योतिषे नमः
१९४ त्रात्रे नमः
१९५ अंतःकरणाय नमः
१९६ गुहाय नमः
१९७ पशुमते नमः
१९८ प्रयतानंदाय नमः
१९९ भूतेशाय नमः
२०० श्रीमतांवराय नमः
२०१ नित्योदिताय०
२०२ नित्यरथाय नमः
२०३ सुरेशाय नमः
२०४ सुरपूजिताय नमः
२०५ अजिताय नमः
२०६ विजयाय नमः
२०७ जेत्रे नमः

२०८ जंगमस्थावरात्म-
काय नमः
२०९ जीवानंदाय नमः
२१० नित्यगामिने नमः
२११ विजेत्रे नमः
२१२ विजयप्रदाय नमः
२१३ पर्जन्याय नमः
२१४ अग्नये नमः
२१५ स्थितये नमः
२१६ स्थेयसे नमः
२१७ स्थविराय नमः
२१८ अणवे नमः
२१९ निरंजनाय नमः
२२० प्रद्योतनाय नमः
२२१ रथारूढाय नमः

२२२ सर्वलोकप्रकाश-
काय नमः
२२३ ध्रुवाय नमः
२२४ मेधिने नमः
२२५ महावीर्याय नमः
२२६ हंसाय नमः
२२७ संसारतारकाय०
२२८ सृष्टिकर्त्रे नमः
२२९ क्रियाहेतवे नमः
२३० मार्तंडाय नमः
२३१ मरुतां पतये नमः
२३२ मरुत्वते नमः
२३३ दहनाय नमः
२३४ त्वष्ट्रे नमः
२३५ भगाय नमः

२३६ भोगाय नमः
२३७ अर्यम्णे नमः
२३८ पतये नमः
२३९ वरुणेशाय नमः
२४० जगत्स्वामिने नमः
२४१ कृतकृत्याय नमः
२४२ सुलोचनाय नमः
२४३ विवस्वते नमः
२४४ भानुमते नमः
२४५ कार्यकारणाय न०
२४६ वर्चसां निधये नमः
२४७ असंगगामिने नमः
२४८ तिग्मांशवे नमः
२४९ घर्मांशवे नमः
२५० दीप्तदीधितये नमः

२५१ सहस्रदीधितये०
२५२ ब्रध्नाय नमः
२५३ सहस्रांशवे नमः
२५४ प्रभाकराय नमः
२५५ गभस्तिमते नमः
२५६ दीधितिमते नमः
२५७ ऋग्विधात्रे नमः
२५८ अतुलद्युतये नमः
२५९ भास्कराय नमः
२६० सुरकार्यज्ञाय नमः
२६१ सर्वज्ञाय नमः
२६२ तीक्ष्णदीधितये०
२६३ सुरज्येष्ठाय नमः
२६४ सुरपतये नमः
२६५ वहुज्ञाय नमः

२६६ वचसां पतये नमः
२६७ तेजोनिधये नमः
२६८ बृहत्तेजसे नमः
२६९ बृहत्कीर्तये नमः
२७० बृहस्पतये नमः
२७१ अहिमते नमः
२७२ ऊर्जिताय नमः
२७३ धीमते नमः
२७४ अमुक्ताय नमः
२७५ कीर्तिवर्धनाय नमः
२७६ महावैद्याय नमः
२७७ गणपतये नमः
२७८ गणेशाय नमः
२७९ गणनायकाय नमः
२८० तीव्राय नमः

२८१ प्रतापनाय नमः
२८२ तापिने नमः
२८३ मार्तंडाय नमः
२८४ संप्रतापनाय नमः
२८५ कार्तस्वराय नमः
२८६ हृषीकेशाय नमः
२८७ पद्मिने नमः
२८८ नंदाय नमः
२८९ अभिनंदिताय नमः
२९० पद्मनाभाय नमः
२९१ अमृताहाराय नमः
२९२ स्थितिमते नमः
२९३ केतुमते नमः
२९४ नभसे नमः
२९५ अनाद्यंताय नमः

२९६ अच्युताय नमः
२९७ विश्वाय नमः
२९८ विश्वामित्राय नमः
२९९ घृणिने नमः
३०० विराजे नमः
३०१ असुक्ताय नमः
३०२ मुक्तिजनकाय नमः
३०३ कंचुकिने नमः
३०४ विश्वभावनाय नमः
३०५ अनिमित्तगतये०
३०६ श्रेष्ठाय नमः
३०७ शरण्याय नमः
३०८ सर्वतोमुखाय नमः
३०९ विगाहिरेणवे नमः
३१० असहाय नमः

३११ समायुक्ताय नमः
३१२ समाहिताय नमः
३१३ धर्मकेतवे नमः
३१४ धर्मरतये नमः
३१५ संहर्त्रे नमः
३१६ संयमाय नमः
३१७ यमाय नमः
३१८ प्रणतार्तिहराय०
३१९ वादिने नमः
३२० ऋतवे नमः
३२१ कालानलद्युतये०
३२२ सुखसेव्याय नमः
३२३ महातेजसे नमः
३२४ जगतामादिकारणाय नमः

३२५ महेंद्राभिष्टुताय०

३२६ स्तोत्राय नमः

३२७ स्तुतिहेतवे नमः

३२८ विभाकराय नमः

३२९ सहस्रकराय नमः

३३० आयुष्मते नमः

३३१ अरोषाय नमः

३३२ सुखदाय नमः

३३३ सुखिने नमः

३३४ व्याधिघ्ने नमः

३३५ दुःखघ्ने नमः

३३६ सौख्याय नमः

३३७ कल्याणाय नमः

३३८ कलिपनांवराय नमः

३३९ अरोगकारणाय०

३४० सिद्धये नमः
३४१ वृद्धये नमः
३४२ ऋद्धये नमः
३४३ अहस्पतये नमः
३४४ हिरण्यरेतसे नमः
३४५ आरोग्याय नमः
३४६ विदुषे नमः
३४७ बंधवे नमः
३४८ बुधाय नमः
३४९ महते नमः
३५० प्राणवते नमः
३५१ धृतिमते नमः
३५२ धर्माय नमः
३५३ धर्मकर्त्रे नमः
३५४ रुचिप्रदाय नमः

३५५ सर्वप्रियाय नमः
३५६ सर्वसहाय नमः
३५७ सर्वशत्रुनिवारणा-
य नमः
३५८ प्रांशवे नमः
३५९ विद्योतनाय नमः
३६० द्योताय नमः
३६१ सहस्रकिरणाय नमः
३६२ कृतिने नमः
३६३ केयूरभूपणोद्भासि-
ने नमः
३६४ भासिताय नमः
३६५ भासनाय नमः
३६६ अनलाय नमः
३६७ शरण्यार्तिहराय०

३६८ होत्रे नमः
३६९ खद्योताय नमः
३७० खगसत्तमाय नमः
३७१ कर्मसाक्षिणे नमः
३७२ तमोरातये नमः
३७३ सर्वद्युतिहराय नमः
३७४ अमलाय नमः
३७५ कल्याणिने नमः
३७६ कल्याणकराय न०
३७७ कल्पाय नमः
३७८ कल्पकराय नमः
३७९ कवये नमः
३८० कल्याणसृजे नमः
३८१ कल्पवपुषे नमः
३८२ सर्वकल्याणभाज-

नाय नमः
३८३ शांतिप्रियाय नमः
३८४ प्रसन्नात्मने नमः
३८५ प्रशांताय नमः
३८६ प्रशमप्रियाय नमः
३८७ उदारकर्मणे नमः
३८८ सुनयाय नमः
३८९ सुवर्चसे नमः
३९० दीर्घलोचनाय नमः
३९१ वर्चस्विने नमः
३९२ वर्चसामीशाय नमः
३९३ त्रैलोक्येशाय नमः
३९४ वशानुगाय नमः
३९५ ऊर्जस्विने नमः
३९६ सुयशसे नमः

३९७ वर्णिने नमः
३९८ वर्णाध्यक्षाय नमः
३९९ वलिप्रियाय नमः
४०० यशस्विने नमः
४०१ वेदनिलयाय नमः
४०२ तेजस्विने नमः
४०३ प्रकृतिस्थिताय न०
४०४ आकाशगाय नमः
४०५ शीघ्ररतये नमः
४०६ आशुगाय नमः
४०७ श्रुतिमते नमः
४०८ खगाय नमः
४०९ गोपतये नमः
४१० ग्रहदेवेशाय नमः
४११ गोमते नमः

४१२ एकाय नमः
४१३ प्रभंजनाय नमः
४१४ जानित्रे नमः
४१५ प्रजनाय नमः
४१६ दीपाय नमः
४१७ सर्वजीवाय नमः
४१८ प्रकाशकृते नमः
४१९ कर्मसाक्षिणे नमः
४२० योगनित्याय नमः
४२१ नभश्रिये नमः
४२२ असुरांतकाय नमः
४२३ रक्षोघ्नाय नमः
४२४ विघ्नशमनाय नमः
४२५ किरीटिने नमः
४२६ सुमनप्रियाय नमः

४२७ मरीचिमते नमः
४२८ अनुमते नमः
४२९ गतक्षोभाय नमः
४३० विशेषगाय नमः
४३१ शिष्टाचाराय नमः
४३२ सदाचाराय नमः
४३३ सचाराय नमः
४३४ चारतत्पराय नमः
४३५ मंदाराय नमः
४३६ माठराय नमः
४३७ दंडाय नमः
४३८ क्षोभणाय नमः
४३९ पक्षिणां गुरवे नमः
४४० कृतक्षोभाय नमः
४४१ विशिष्टात्मने नमः

४४२ विधेयाय नमः
४४३ ज्ञानशोभनाय नमः
४४४ श्वेतकांतये नमः
४४५ महाश्वेताय नमः
४४६ सानुगाय नमः
४४७ मोक्षदायकाय नमः
४४८ सर्ववेदप्रगीतात्मने नमः
४४९ सर्ववेदलयाय नमः
४५० अलयाय नमः
४५१ वेदमूर्तये नमः
४५२ चतुर्वेदाय नमः
४५३ वेदाब्धये नमः
४५४ वेदपारगाय नमः
४५५ क्रियावते नमः

४५६ अतिरोचिष्णवे न०
४५७ वरीयसे नमः
४५८ वरप्रदाय नमः
४५९ व्रतचारिणे नमः
४६० व्रतधराय नमः
४६१ लोकबंधवे नमः
४६२ अलंकृताय नमः
४६३ अलंकाराय नमः
४६४ अक्षराय नमः
४६५ दिव्यविद्यावते नमः
४६६ विदिताशयाय नमः
४६७ प्रभापूर्णाय नमः
४६८ जितरिपवे नमः
४६९ सुजनाय नमः
४७० अरुणसारथये नमः

४७१ कुबेराय नमः
४७२ सुरथाय नमः
४७३ स्कंदाय नमः
४७४ महिताय नमः
४७५ अभिहिताय नमः
४७६ गुरवे नमः
४७७ ग्रहराजाय नमः
४७८ ग्रहपतये नमः
४७९ ग्रहनक्षत्रमंडनाय०
४८० भास्कराय नमः
४८१ सततानंदाय नमः
४८२ नंदनाय नमः
४८३ वरवाहनाय नमः
४८४ चतुर्मुखाय नमः
४८५ पद्ममालिने नमः

४८६ पूतात्मने नमः
४८७ प्रणतार्तिघ्ने नमः
४८८ अकिंचनाय नमः
४८९ सत्यसंधाय नमः
४९० निर्गुणाय नमः
४९१ गुणवते नमः
४९२ शुचये नमः
४९३ संपूर्णाय नमः
४९४ पुंडरीकाक्षाय नमः
४९५ विधेयाय नमः
४९६ योगतत्पराय नमः
४९७ सहस्रांशवे नमः
४९८ ऋतुपतये नमः
४९९ सर्वस्वाय नमः
५०० सुमते नमः

५०१ सुवाचे नमः
५०२ सुवाहनाय नमः
५०३ माल्यदाम्ने नमः
५०४ घृताहाराय नमः
५०५ हरिप्रियाय नमः
५०६ प्रथिताय नमः
५०७ ब्राह्मणाय नमः
५०८ ब्रह्मणे नमः
५०९ प्रतीतात्मने नमः
५१० सुरालयाय नमः
५११ शतविंदवे नमः
५१२ शतमखाय नमः
५१३ गरीयसे नमः
५१४ अनलप्रभाय नमः
५१५ धीराय नमः

५१६ महत्तराय नमः
५१७ धन्याय नमः
५१८ पुरुषाय नमः
५१९ पुरुषोत्तमाय नमः
५२० सुसंस्थिताय नमः
५२१ दिव्यरथाय नमः
५२२ मोक्षाधारनिकेत-
नाय नमः
५२३ वैद्याय नमः
५२४ राजाधिराजाय न०
५२५ विद्याराजाय नमः
५२६ विवादकृते नमः
५२७ अनिर्देश्यवपुषे न०
५२८ श्रीदाय नमः
५२९ वीरेंद्राय नमः

५३० बहुमंगलाय नमः
५३१ निर्द्वंद्वाय नमः
५३२ द्वंद्वघ्ने नमः
५३३ सर्गाय नमः
५३४ सर्वगाय नमः
५३५ स्वप्रकाशकाय न०
५३६ चतुर्वेदधराय नमः
५३७ अचिंत्याय नमः
५३८ विनिद्राय नमः
५३९ विविधाशनायनमः
५४० चक्रवर्तिने नमः
५४१ धृतिकराय नमः
५४२ महाराजाय नमः
५४३ महेश्वराय नमः
५४४ विचित्ररथाय नमः

५४५ एकाकिने नमः
५४६ सप्तसप्तये नमः
५४७ परात्पराय नमः
५४८ सर्वोदधिस्थितिकृ-
राय नमः
५४९ स्थितये नमः
५५० स्थेयाय नमः
५५१ स्थितिप्रियाय नमः
५५२ निष्कलाय नमः
५५३ पुष्कलनभसे नमः
५५४ वसुदाय नमः
५५५ वासवप्रियाय नमः
५५६ वसुमते नमः
५५७ वासवस्वामिने न०
५५८ वसुराजाय नमः

५५९ वसुप्रियाय नमः
५६० बलवते नमः
५६१ ज्ञानवते नमः
५६२ स्वाहास्वधावेदा-
दिकारकाय नमः
५६३ संकल्पयोनये नमः
५६४ दिनकृते नमः
५६५ भगवते नमः
५६६ कारणावहाय नमः
५६७ नीलकंठाय नमः
५६८ धनाध्यक्षाय नमः
५६९ धनिने नमः
५७० धर्मिणे नमः
५७१ प्रियंवदाय नमः
५७२ वषट्काराय नमः

५७३ हुताय नमः
५७४ होत्रे नमः
५७५ स्वाहाकाराय नमः
५७६ हुताहुतये नमः
५७७ जनार्दनाय नमः
५७८ जनानंदिने नमः
५७९ नराय नमः
५८० नारायणाय नमः
५८१ अंबुदाय नमः
५८२ स्वर्णांगाय नमः
५८३ क्षपणाय नमः
५८४ वायवे नमः
५८५ आयवे नमः
५८६ सुरनमस्कृताय नमः
५८७ विग्रहाय नमः

५८८ विमलाय नमः
५८९ विंदवे नमः
५९० विशोकाय नमः
५९१ विमलद्युतये नमः
५९२ द्योतिताय नमः
५९३ द्योतनाय नमः
५९४ विदुषे नमः
५९५ विदिताय नमः
५९६ वरदाय नमः
५९७ वलिने नमः
५९८ धर्मयोनये नमः
५९९ महामोहाय नमः
६०० विष्णुभ्रात्रे नमः
६०१ सनातनाय नमः
६०२ सावित्रीभाविता-

य नमः

६०३ राज्ञे नमः

६०४ विस्तृताय नमः

६०५ विघृणाय नमः

६०६ विराजे नमः

६०७ सप्तार्चिषे नमः

६०८ सप्ततुरगाय नमः

६०९ सप्तलोकनमस्कृताय नमः

६१० संपन्नाय नमः

६११ गुणसंपन्नाय नमः

६१२ सुमनसे नमः

६१३ शोभनप्रियाय नमः

६१४ सर्वात्मने नमः

६१५ सर्वकृते नमः

६४६ जगतां पतये नमः
६४७ जगत्पित्रे नमः
६४८ प्रीतमनसे नमः
६४९ शर्वाय नमः
६५० सर्वगुहाय नमः
६५१ अचलाय नमः
६५२ जगदानंदिने नमः
६५३ जगत्रात्रे नमः
६५४ सुरारिघ्ने नमः
६५५ श्रेयसे नमः
६५६ श्रेयस्कराय नमः
६५७ ज्यायसे नमः
६५८ उत्तमोत्तमाय नमः
६५९ उत्तमाय नमः
६६० महामेरवे नमः

६६१ महाशैलाय नमः
६६२ धारणाय नमः
६६३ धरणीधराय नमः
६६४ धराधराय नमः
६६५ धर्मराजाय नमः
६६६ धर्माधर्मप्रवर्तका०
६६७ रथाध्यक्षाय नमः
६६८ रथपतये नमः
६६९ त्वरमाणाय नमः
६७० अमितानलाय नमः
६७१ उत्तराय नमः
६७२ पूर्वदिक्स्वामिने०
६७३ तारापतये नमः
६७४ अपांपतये नमः
६७५ पुण्यसंकीर्तनाय०

६७६ पुण्यहेतवे नमः
६७७ लोकत्रयाश्रयाय०
६७८ स्वर्भानवे नमः
६७९ विगतारिष्टाय नमः
६८० विशिष्टोत्कृष्टकर्म-
कृते नमः
६८१ व्याधिप्रणाशना-
य नमः
६८२ केतवे नमः
६८३ शूराय नमः
६८४ सर्वजितां वराय०
६८५ एकनाथाय नमः
६८६ रथाधीशाय नमः
६८७ शनैश्चरपित्रे नमः
६८८ असिताय नमः

६८९ वैवस्वतगुरवे नमः
६९० मृत्यवे नमः
६९१ नित्यधर्माय नमः
६९२ महाबलाय नमः
६९३ प्रलंबहाराय नमः
६९४ संचारिणे नमः
६९५ प्रद्योताय नमः
६९६ उद्योतिताय नमः
६९७ अनलाय नमः
६९८ संतानकृते नमः
६९९ महामंत्राय नमः
७०० मंत्रमूर्तये नमः
७०१ महालयाय नमः
७०२ श्रेष्ठात्मने नमः
७०३ मरुतः सूनवे नमः

७०४ मरुतामीश्वराय०
७०५ शुचये नमः
७०६ संसारगतिविच्छेत्त्रे नमः
७०७ संसारार्णवतारकाय नमः
७०८ सप्तजिह्वाय नमः
७०९ सहस्रार्चिषे नमः
७१० रत्नगर्भाय नमः
७११ अपराजिताय नमः
७१२ धर्मकेतवे नमः
७१३ अमोघात्मने नमः
७१४ धर्माधर्मप्रकाशकाय नमः
७१५ लोकसाक्षिणे नमः

७१६ लोकगुरवे नमः
७१७ लोकेशाय नमः
७१८ छंदवाहनाय नमः
७१९ धर्मयूपाय नमः
७२० सूक्ष्मवायवे नमः
७२१ धनुष्पाणये नमः
७२२ धनुर्धराय नमः
७२३ पिनाकधृषे नमः
७२४ महोत्साहाय नमः
७२५ नैकमायाय नमः
७२६ महाशनाय नमः
७२७ शक्तये नमः
७२८ शक्तिमतां श्रेष्ठाय०
७२९ सर्वशस्त्रभृतां वरा-
य नमः

७३० ज्ञानगम्याय नमः
७३१ दुराराध्याय नमः
७३२ लोहितांगाय नमः
७३३ अरिमर्दनाय नमः
७३४ अनंताय नमः
७३५ अनंतधर्मज्ञाय नमः
७३६ दानिने नमः
७३७ धर्मकृते नमः
७३८ चक्रिविक्रमाय न०
७३९ दैवताय नमः
७४० त्र्यक्षराय नमः
७४१ अभेद्याय नमः
७४२ नीलांगाय नमः
७४३ नीललोहिताय नमः
७४४ व्यासाय नमः

७४५ व्यसनघ्ने नमः
७४६ वादिने नमः
७४७ व्योमचारिणे नमः
७४८ व्ययापहाय नमः
७४९ शार्ङ्गधन्वने नमः
७५० स्थिराय नमः
७५१ भीमाय नमः
७५२ सर्वप्रहरणायुधा-
य नमः
७५३ परमेष्ठिने नमः
७५४ परंज्योतिषे नमः
७५५ नाकपालिने नमः
७५६ दिवस्पतये नमः
७५७ वदान्याय नमः
७५८ वासुकये नमः

७५९ वेद्याय नमः
७६० आत्रेयाय नमः
७६१ अतिपराक्रमाय०
७६२ द्वापराय नमः
७६३ परमोदाराय नमः
७६४ परमाय नमः
७६५ ब्रह्मचर्यव्रते नमः
७६६ उद्दीप्तवेषाय नमः
७६७ मुकुटिने नमः
७६८ पद्महस्ताय नमः
७६९ हिमांशुभृते नमः
७७० स्मिताय नमः
७७१ प्रशांतवदनाय न०
७७२ पद्मोदरनिभान-
नाय नमः

७७३ सायंदिवादिव्यव-
पुषे नमः
७७४ अनिर्देश्याय नमः
७७५ महारथाय नमः
७७६ महाप्रभवे नमः
७७७ महानीकाय नमः
७७८ शेषाय नमः
७७९ सत्वरजस्तमाय न०
७८० अनन्यप्रतिमाय०
७८१ स्पष्टाय नमः
७८२ नित्यतुष्टाय नमः
७८३ कृतातपाय नमः
७८४ अहिंसकाय नमः
७८५ भयकराय नमः
७८६ लोकालोकप्रकाश-

काय नमः
७८७ जगन्नाथाय नमः
७८८ जगत्साक्षिणे नमः
७८९ जगज्जनमनोह-
राय नमः
७९० भास्वते नमः
७९१ विभावसवे नमः
७९२ वेधसे नमः
७९३ विहारिणे नमः
७९४ वरदायकाय नमः
७९५ ग्रहनाथाय नमः
७९६ ग्रहपतये नमः
७९७ ग्रहेशाय नमः
७९८ तिमिरापहाय नमः
७९९ सैंहिकेयरिपवे नमः

८०० सिंहस्वामिने नमः
८०१ सिंहासनस्थिताय
नमः
८०२ त्रयीतनवे नमः
८०३ जगच्चक्षुषे नमः
८०४ अद्वितीयाय नमः
८०५ अरिमर्दनाय नमः
८०६ चतुर्वर्णार्तिघ्ने नमः
८०७ शुद्धमतये नमः
८०८ शुद्धाय नमः
८०९ सुधालयाय नमः
८१० द्विभुजाय नमः
८११ अद्वयवादिने नमः
८१२ योगिने नमः
८१३ योगीश्वराय नमः

८१४ अरुणाय नमः
८१५ योगिगम्याय नमः
८१६ दुराराध्याय नमः
८१७ योगवते नमः
८१८ योगिनीपतये नमः
८१९ दिक्पतये नमः
८२० दिवसस्वामिने न०
८२१ दिलीपाय नमः
८२२ व्योमदीपकाय नमः
८२३ कलिरताय नमः
८२४ कलायुक्ताय नमः
८२५ कलिकल्मषनाश-
नाय नमः
८२६ कलावते नमः
८२७ कलिदोषघ्नाय नमः

८२८ कलिदेवाय नमः
८२९ कलानिधये नमः
८३० कालज्ञानपराय०
८३१ पूर्वाय नमः
८३२ पूर्वदिक्पुत्राय नमः
८३३ उत्तमाय नमः
८३४ पूर्वदिक्तिलकाय०
८३५ पुण्याय नमः
८३६ परमात्मने नमः
८३७ परंतपाय नमः
८३८ परंज्योतिषे नमः
८३९ परंधाम्ने नमः
८४० परात्परतराय नमः
८४१ अंतकाय नमः
८४२ उदिताय नमः

८४३ पर्वतारूढाय नमः
८४४ पवित्राय नमः
८४५ पापनाशनाय नमः
८४६ उदयाचलारूढाय नमः
८४७ प्राचीशृंगारभाजनाय नमः
८४८ खरांशवे नमः
८४९ अर्यम्णे नमः
८५० व्योमरत्नाय नमः
८५१ धर्मतनुद्युतये नमः
८५२ अहर्मणये नमः
८५३ अनंतात्मने नमः
८५४ कृतांतजनकाय न०
८५५ अध्वगाय नमः

८५६ यमुनाजनकाय०
८५७ जीवाय नमः
८५८ जयलक्ष्मीविभूषि-
ताय नमः
८५९ चित्रांगदाय नमः
८६० चित्रभानवे नमः
८६१ चराचरविकासकृ-
ते नमः
८६२ द्वादशात्मने नमः
८६३ ध्वांतशत्रवे नमः
८६४ गगनध्वजाय नमः
८६५ आत्मभुवे नमः
८६६ विश्वाधाराय नमः
८६७ विश्वनाथाय नमः
८६८ विश्वध्वांतप्रणाश-

क्ृते नमः

८६९ पद्महस्ताय नमः

८७० पद्ममित्राय नमः

८७१ पद्मरागसमद्युत-
ये नमः

८७२ पद्मिनीबाधकाय०

८७३ पूताय नमः

८७४ परमाय नमः

८७५ पद्मबांधवाय नमः

८७६ नमस्कारप्रियाय०

८७७ हेलिने नमः

८७८ विश्वरूपाय नमः

८७९ विनोदकृते नमः

८८० भरणीसंभवाय
भीमाय नमः

८८१ भूर्भुवःस्वःप्रकाश-
काय नमः
८८२ वेदगीताय नमः
८८३ वेदमुख्याय नमः
८८४ ऋग्यजुःसामाय०
८८५ इनाय नमः
८८६ युगादिकरणाय०
८८७ स्थितिसंहारकार-
काय नमः
८८८ वैकल्यनाशाय नमः
८८९ वेदांगाय नमः
८९० वेदविद्याविशारदा-
य नमः
८९१ सुवर्णरेतसे नमः
८९२ सुभगाय नमः

८९३ हव्यकव्यप्रदाय-
काय नमः
८९४ ओंकाराय नमः
८९५ वषट्काराय नमः
८९६ इषेत्वोर्जेस्वरूपधृ-
षे नमः
८९७ जितवैश्वानराय०
८९८ जातवेदसे नमः
८९९ जगदलंकृतये नमः
९०० अक्षराय नमः
९०१ कृतविश्वाय नमः
९०२ अर्काय नमः
९०३ मिहिराय नमः
९०४ मंडलाधिपाय नमः
९०५ दुर्विज्ञेयगतये नमः

९०६ त्वष्ट्रे नमः
९०७ सुहृदाश्रितमंदिरा-
य नमः
९०८ कलिंगदेशसंभूता-
य नमः
९०९ कांताय नमः
९१० काश्यपगोत्रजाय०
९११ ईश्वराग्र्यधिदेवा-
य नमः
९१२ तीव्राय नमः
९१३ पद्मासनस्थिता-
य नमः
९१४ अनादिरूपाय नमः
९१५ दितिजाय नमः
९१६ रत्नकांतये नमः

११७ प्रभामयाय नमः
११८ जगत्प्रदीपाय नमः
११९ विस्तीर्णाय नमः
१२० महाविस्तीर्णमंड-
लाय नमः
१२१ एकचक्ररथाय न०
१२२ स्वर्णरथाय नमः
१२३ स्वर्णशरीरधृषे न०
१२४ निरालंबाय नमः
१२५ गगनगाय नमः
१२६ धर्मकर्मप्रभावकृ-
ते नमः
१२७ धर्मात्मने नमः
१२८ कर्मणां साक्षिणे०
१२९ प्रत्यक्षाय नमः

१३० परमेश्वराय नमः
१३१ मेरुसेविने नमः
१३२ सुमेधाविने नमः
१३३ मेरुरक्षाकराय नमः
१३४ महते नमः
१३५ आधारभूताय नमः
१३६ धृतिमते नमः
१३७ धनधान्यसमृद्धि-
कृते नमः
१३८ पापसंतापसंहर्त्रे०
१३९ मनोवांछितदाय-
काय नमः
१४० रोगहर्त्रे नमः
१४१ राज्यदायिने नमः
१४२ रमणीयगुणाय न०

१४३ अनृणिने नमः
१४४ कालत्रयानंतरूपा०
१४५ मुनिवृंदनमस्कृता-
य नमः
१४६ संध्यारागकराय०
१४७ सिद्धैः संध्यावंदन-
वंदिताय नमः
१४८ साम्राज्यदाननि-
रताय नमः
१४९ समाराधनतोषकृ-
ते नमः
१५० भक्तदुःखक्षयकरा०
१५१ भवसागरतारका-
य नमः
१५२ भयापहर्त्रे नमः

९५३ भगवते नमः
९५४ अप्रमेयपराक्रमा०
९५५ मनुस्वामिने नमः
९५६ मन्युपतये नमः
९५७ मान्याय नमः
९५८ मन्वंतराधिपाय०
९५९ अहोरात्रचराय०
९६० अनादये नमः
९६१ अघमर्षणाय नमः
९६२ ईशित्रे नमः
९६३ गायत्रीजपसुप्री-
ताय नमः
९६४ भर्गाय नमः
९६५ भूदेववंदिताय नमः
९६६ सहस्रकिरणस्वा-

मिने नमः
१६७ सहस्राक्षाय नमः
१६८ सहस्रपदे नमः
१६९ कामदाय नमः
१७० मोक्षदाय नमः
१७१ साधवे नमः
१७२ साधुलोकसुखा-
वहाय नमः
१७३ जयध्वजाय नमः
१७४ जितरिपवे नमः
१७५ जयश्रिये नमः
१७६ जयदायकाय नमः
१७७ भूतशुद्धिकराय०
१७८ भूपाय नमः
१७९ भव्याय नमः

१८० भूमिप्रकाशकाय०
१८१ मार्गानुगाय नमः
१८२ महादेवाय नमः
१८३ अमितगामिने०
१८४ महाप्रभवे नमः
१८५ निराधाराय नमः
१८६ निराहाराय नमः
१८७ नयवते नमः
१८८ निपुणाय नमः
१८९ अनघाय नमः
१९० परमब्रह्मचारिणे०
१९१ चराचरपुरोहिता-
य नमः
१९२ स्वर्दीपकाय नमः
१९३ अमितत्राणाय न०

९९४ परप्राणाय नमः
९९५ प्रमाणकृते नमः
९९६ शुक्लाय नमः
९९७ शुक्लप्रभाय नमः
९९८ स्वामिने नमः
९९९ रक्तांगाय नमः
१००० सूर्यदेवतायै नमः

अनेन मत्कृतेन सहस्रसंख्याकामुकद्रव्यसमर्पणाख्येन कर्मणा श्रीसूर्यनारायणः प्रीयतां न मम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ शुभं भवतु ॥

इदं पुस्तकं मुम्बापुर्यां स्वीये निर्णयसागरा-
ख्यमुद्रणयन्त्रालये तदधिपतिना
मुद्रापयित्वा प्रसिद्धिं नीतम्॥

शकाब्दाः १८५०, सनाब्दाः १९२८.

Published by Pandurang Jawaji,
Proprietor Nirnaya Sagar Press,
26-28, Kolbhat Lane, Bombay.

Printed by Ramchandra Yesu Shedge,
at the Nirnaya Sagar Press,
26-28, Kolbhat Lane, Bombay.

# अथ दत्तात्रयसहस्र-नामावलिः प्रारभ्यते ।

मूल्यं ४ आणकाः

श्रीगणेशाय नमः ॥ अथ दत्तात्रेयसहस्रनामावलीप्रारंभः ॥ अद्यपूर्वोच्चरितएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौममात्मनः पुराणोक्तफलप्राप्त्यर्थं धर्मार्थकाममोक्षसिद्धिद्वारा श्रीगुरुदत्तात्रेयप्रीत्यर्थं तत्सहस्रनामभिः सहस्रतुलसीपत्रादिसमर्पणं करिष्ये ॥ ॥ अथ ध्यानम् ॥

दिगंबरं भस्मविलेपितांगं वोधात्मकं मुक्तिकरं प्र-

सन्नम् ॥ निर्मानसं श्या-
मतनुं भजेऽहं दत्तात्रय
ब्रह्मसमाधियुक्तम् ॥ १ ॥
॥ इति ध्यानम् ॥

१ श्रीदत्तात्रेयाय नमः
२ महायोगिने नमः
३ योगेशाय नमः
४ अमरप्रभवे नमः
५ मुनये नमः
६ दिगंबराय नमः
७ बालाय नमः
८ मायामुक्ताय नमः
९ मदापहाय नमः
१० अवधूताय नमः
११ महानाथाय नमः
१२ शंकराय नमः
१३ अमरवल्लभाय नमः
१४ महादेवाय नमः
१५ आदिदेवाय नमः

१६ पुराणप्रभवे नमः
१७ ईश्वराय नमः
१८ सत्वकृते नमः
१९ सत्वभृते नमः
२० भावाय नमः
२१ सत्वात्मने नमः
२२ सत्वसागराय नमः
२३ सत्वविदे नमः
२४ सत्वसाक्षिणे नमः
२५ सत्वसाध्याय नमः
२६ अमराधिपाय नमः
२७ भूतकृते नमः
२८ भूतभृते नमः
२९ भूतात्मने नमः
३० भूतसंभवाय नमः

३१ भूतभावाय नमः
३२ भावाय नमः
३३ भूतविदे नमः
३४ भूतकारणाय नमः
३५ भूतसाक्षिणे नमः
३६ प्रभूतये नमः
३७ भूतानां परमागत-
ये नमः
३८ भूतसंगविहीनात्म-
ने नमः
३९ भूतात्मने नमः
४० भूतशंकराय नमः
४१ भूतनाथाय नमः
४२ महानाथाय नमः
४३ आदिनाथाय नमः

४४ महेश्वराय नमः
४५ सर्वभूतनिवासात्म-
ने नमः
४६ भूतसंतापनाशना-
य नमः
४७ सर्वात्मने नमः
४८ सर्वभृते नमः
४९ सर्वाय नमः
५० सर्वज्ञाय नमः
५१ सर्वनिर्णयाय नमः
५२ सर्वसाक्षिणे नमः
५३ बृहद्भानवे नमः
५४ सर्वविदे नमः
५५ सर्वमंगलाय नमः
५६ शांताय नमः

५७ सत्याय नमः
५८ समाय नमः
५९ पूर्णाय नमः
६० एकाकिने नमः
६१ कमलापतये नमः
६२ रामाय नमः
६३ रामप्रियाय नमः
६४ विरामाय नमः
६५ रामकारणाय नमः
६६ शुद्धात्मने नमः
६७ पावनाय नमः
६८ अनंताय नमः
६९ प्रतीताय नमः
७० परमार्थभृते नमः
७१ हंससाक्षिणे नमः

७२ विभवे नमः
७३ प्रभवे नमः
७४ प्रलयाय नमः
७५ सिद्धात्मने नमः
७६ परमात्मने नमः
७७ सिद्धानां परमागतये नमः
७८ सिद्धिसिद्धये नमः
७९ साध्याय नमः
८० साधनाय नमः
८१ उत्तमाय नमः
८२ सुलक्षणाय नमः
८३ सुमेधाविने नमः
८४ विद्यावते नमः
८५ विगतांतराय नमः

८६ विज्वराय नमः
८७ महाबाहवे नमः
८८ बहुलानंदवर्धनाय०
८९ अव्यक्तपुरुषाय न०
९० प्राज्ञाय नमः
९१ परज्ञाय नमः
९२ परमार्थदृशे नमः
९३ परापरविनिर्मुक्ताय नमः
९४ युक्ताय नमः
९५ तत्त्वप्रकाशवते न०
९६ दयावते नमः
९७ भगवते नमः
९८ भाविने नमः
९९ भावात्मने नमः

१०० भावकारणाय नमः
१०१ भवसंतापनाशाय०
१०२ पुष्पवते नमः
१०३ पंडिताय नमः
१०४ बुधाय नमः
१०५ प्रत्यक्षवस्तुने नमः
१०६ विश्वात्मने नमः
१०७ प्रत्यग्ब्रह्मसनात-
नाय नमः
१०८ प्रमाणविगताय न०
१०९ प्रत्याहारनियोज-
काय नमः
११० प्रणवाय नमः
१११ प्रणवातीताय नमः
११२ प्रमुखाय नमः

११३ प्रलयात्मकाय नमः
११४ मृत्युंजयाय नमः
११५ विविक्तात्मने नमः
११६ शंकरात्मने नमः
११७ परस्मै वपुषे नमः
११८ परमाय नमः
११९ तनुविज्ञेयाय नमः
१२० परमात्मनि संस्थि-
ताय नमः
१२१ प्रबोधकलनाधारा-
य नमः
१२२ प्रभावप्रवरोत्तमाय
नमः
१२३ चिदंबराय नमः
१२४ चिद्विलासाय नमः

१२५ चिदाकाशाय नमः
१२६ चिदुत्तमाय नमः
१२७ चित्तचैतन्यचित्तात्मने नमः
१२८ देवानां परमागतये नमः
१२९ अचेत्याय नमः
१३० चेतनाधाराय नमः
१३१ चेतनाचित्तविक्रमाय नमः
१३२ चित्तात्मने नमः
१३३ चेतनारूपाय नमः
१३४ लसत्पंकजलोचनाय नमः
१३५ परब्रह्मणे नमः

